प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः।

यन्मतेऽप्यन्योत्पादनानुकूलं व्यापारसामान्यं भावना तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धे रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति। अतश्च प्रयत्न एवार्थी भावना। यथाहुः—

प्रयत्नव्यतिरिक्तार्थी भावना तु न शक्यते।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते॥ (न्यायसुधा) इति।

अन्ये त्वाहुः। भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना। यस्मिन्व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत्। स एव चाख्यातार्थः। कुठारेण छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मिन्व्यापारे कृते कुठारेण छेदनं भवतीति। एवं यजेत स्वर्गकाम इत्यस्यायमर्थः—यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागात्स्वर्गो भवतीति। स च व्यापारः क्वचिदुद्यमननिपातनादिः क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः कथंभावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते।

---

स्यासंभवादित्याशयः। प्रयोगोपपत्तेरिति। अन्ये त्वत्राख्यातस्याख्यातत्वेनैकत्वसंख्यामात्रबोधकत्वं न तु यत्नार्थकत्वम्। वर्तमानकालस्तु लडंशेनोच्यत एवेत्याहुः। यन्मतेपीति। चेतननिष्ठः प्रयत्नः। अचेतननिष्ठः स्पन्दः। तादृशोभयसाधारणमन्योत्पादानुकूलं व्यापारसामान्यमाख्यातार्थः। अन्यपदेन धात्वर्थ उच्यते। एतन्मतेपि रथो गच्छतीत्यत्रानुपपत्तिरस्त्येव। गमधात्वर्थोत्तरदेशसंयोगानुकूलव्यापारः। स एव रथे दृश्यते न तु तदुत्पत्त्यनुकूलं व्यापारान्तरं तत्र किंचिद्दृश्यते। तथा चाख्यातार्थस्यानुपपत्तिरित्याख्यातस्याश्रयेर्थे लक्षणा स्वीकर्तव्या भवति। यथाहुरिति। न्यायसुधायामेतदुक्तम्।

पार्थसारथिमिश्रमतमाह—अन्ये त्वाहुरिति। भवितुरुत्पद्यमानस्य यद्भवनमुत्पत्तिस्तदनुकूलो यस्तदुत्पादकस्य व्यापारः सा भावना। यद्व्यापारानन्तरं तत्रत्यं यागकुठारादिकं करणं फलप्रदानायोद्यतं भवति स व्यापार इत्यर्थः। स एव चेति। अन्वाधानादिर्व्यापारो देवतोद्देश्यकहविःप्रक्षेपानुकूलत्वेन विशेषरूपेण यजधातुवाच्यः। अन्योत्पादानुकूलत्वेन सामान्यरूपेण स एवाख्यातप्रत्ययवाच्यः। स च व्यापार इति। स चाख्यातवाच्यो व्यापारः कीदृश इत्येवं कथंभावाकाङ्क्षायां क्वचिदुद्यमनादिः क्वचिदग्न्यन्वाधानादि-

र्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः । न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ( गीता ९।२७ )

इतिस्मृतेः । अस्याश्चाष्टकादिस्मृतिवत्प्रामाण्यादित्यन्यत्र विस्तरः ॥

क्वाहं मन्दमतिः क्वेयं प्रक्रिया भाट्टसंमता ।
तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः ॥
ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः ।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः ॥

इति श्रीमदनन्तदेवसूनुना आपदेवेन कृतं मीमांसान्याय-
प्रकाशसंज्ञकं मीमांसाप्रकरणं समाप्तम् ॥

---

परमेश्वरप्रीत्यर्थं क्रियते चेत्परमेश्वरप्रीतिद्वारा मोक्षहेतुर्भवति । प्रमाणाभाव इति । यजेतेश्वरप्रीतिकाम इतिश्रुत्यदर्शनादित्याशयः । अष्टकादीति । यथा-ष्टकाश्राद्धप्रतिपादिका स्मृतिः स्वमूलभूतां श्रुतिमनुमापयन्ती तादृशश्रुति-मूलकत्वात्प्रमाणं भवति तद्वत्तत्कुरुष्व मदर्पणमिति स्मृतिरपि तादृशार्थबोध-कानुमितश्रुतिमूलकत्वात्प्रमाणं भवति । तथा च श्रीपरमेश्वरप्रीत्यर्थमिति संकल्प्य कृताद्यागादिधर्मान्मोक्षप्राप्तिर्भवतीति तात्पर्यम् । अथ ग्रन्थकारः स्वौद्धत्यं परिहरति—क्वाहमिति । गुरुपादविषयिणी दृढा भक्तिरेवात्र कर्मणि मां मुखरीकरोतीत्यर्थ इति शिवम् ॥

*इति श्रीविद्वन्मुकुटरत्नभास्करदासस्यान्तेवासिसकलविद्यापारंगत-*
*पण्डितरामशास्त्रिच्छात्रेणाभ्यंकरोपाह्वमहामहोपाध्याय-*
*वासुदेवशास्त्रिणा विरचिता मीमांसान्यायप्रकाश-*
*व्याख्या प्रभानाम्नी समाप्तिमगमत् ॥*

---

॥ श्रीः ॥

अथ श्रीमीमांसान्यायप्रकाशे सटीके प्रसङ्गादुद्धृतानां श्रुतिस्मृत्यादीनामधिकरणानां न्यायानां दोषाणां च वर्णानुक्रमेण

सूचीपत्रम् ।

र



ल



व